अ॰रो॰ था॥ हेकम्बुकण्ठिशुककिन्नरहंसवाणीत्यादि तस्यमेपुर्हिरेफाणांकर्णोत्पलनिपातिनाम् स्वरसंवादिभिः कण्ठैः शालिगोप्योजगुर्गुणान् क
७९ ण्ठः किमस्याः पिकवेणुवीणास्तिस्रोजितास्सूचयतित्रिरेखः इत्यन्तराःस्तूयतकाचिदत्राननलेनभेमीकलमालपन्ती माधुर्यमित्यादि मधुद्रोणी
वमन्दाक्षरन्दामन्दवृष्टिवत् सुधासारइवद्रासागोणीवाणीतवप्रिये वाहुर्विसेनविद्युद्वल्लिमृणालैर्विसमृणालयोरवान्तरभेदविवस्योक्तम् अ
स्याभुजाभ्यांविजिताहिसात्किंपृथक्करोगृह्यतततप्रसूनम् इहेसतेतन्नुगृह्यास्मितैः कैर्नगीयतेवाकरएवलोकैः विद्युन्मृणालसुभगावाहुवल्लिमृ
गीदृशः पूनान्सुकण्ठकाण्डेषुजाताकनकशृंखला करस्तुपद्मेनपल्लवविद्रुमाभ्याम् करकिशलयेनसुदृशारागसरित्पंकजेनेव शिथिलितविद्रु
ममहसास्पष्टोहंचेतनांनलेभे चन्द्रकलाकुन्दकोरकैर्नखाः यथा॥ निर्भर्त्सिताशोकदलप्रसूतिपाणिद्वयंचारुनखंतदीयम् नवोदितेन्दुप्रतिम
स्यशोभांकोमलः प्रदोषेविपरीतचकार निर्दोषरत्नसुभगैः कुन्दकोरककान्तिभिः नखैः कमलपत्राणिवालाचक्रेपृथक्पृथक् पूगाङ्कुरतवकोर
कविल्वतालगुच्छेभकुम्भाद्रिघटैश्चक्रैः सौवीरजंबीरकवीजपूरसमुद्गकोलङ्गफलैःउरोजः यथा॥ कनककुड्मुकायितंपुरस्तादथपङ्केरुहकोर
कायमानम् क्रमशःकमलायमानमास्तेसुदृशोवसस्तिकस्यभागधेयम् कलशीयतिकुचकमलंकमलीयतिलोचनभ्रमरः अणुकीयतिपुनरस्या

हरिणदृशः प्रत्यहंमध्यः स्तनविल्वद्वयीलस्याः प्रयपौषक्रयाकताम् उड्डीयपुनरद्रीर्णाजहारविपुलश्रीयम् चिरप्रवासिंस्तववाटिकायांवि
भर्तिचत्वारिफलानिचीरुत् सौवीरजम्बीरकवीज पूरतालान्यसौधास्यतिकिंनजाने स्वर्गोवागुच्छोवेत्यादिस्वयंभूः शंभुरंभोजलोचनेत्वत्य
योधरः नखेनकस्यधन्यस्यचन्द्रचूडोभविष्यति संपुटंहाटकीयमित्यादिस्मनकतरुशाखालम्विकोलङ्गः युग्ममित्यादिमहतोपिमहीयांस
मवियांसमणोरपि तत्प्रतीकंविदुर्नूनमणुमध्येनभस्तनि रेखाकान्तातिसुभ्रया मारोमालिस्तेनतादृशैः शैवालधूमभृंगालिलताद्यैरुपमी
यते नाभीविलादुद्गलिताभुजङ्गीरोमालिरास्यैन्दुसुधालिलिसुः समीस्यकेशावलिवर्हिमालामुरोजगिर्योः समलीयतान्तः सुगममिदम् नाभी
रसातलाद्वसंहृदकूपनदादिभिः यथा॥मदनसरितमेतांगाहमानोजनोसौजघनपुलिननाभीमण्डलावर्तरम्याम् मुखकमलस्तनायामुल्लस
द्रूलतोर्मिचिरविरहतुताशापासमुक्ताञ्चकार स्वन्नाभिकूपः पातालेनितम्वस्तवमेदिनी पयोधरस्तेहेमाद्रिस्त्वंममासिजगत्रयम् हृदनदसरो
सिंनाभिरिवचलीतटिनीरसात्मकञ्चवपुः तदपितलोदरिसंप्रतिकथमिवसंतापमातनुषे वलीतटिन्यातद्रूपैस्तत्तमैः पाशादिभिस्तदाह त्रि
वलीपाशैस्तम्यातत्यावद्धः कामस्यसोपानमिवप्रयुक्तमितिष्टष्ठंकांचनपट्टकैः मुक्तावलिस्तेरदनाः पृष्ठंकांचनपट्टकम् नखांशवस्तेरत्नानिम

अ॰ कौ॰ धीमध्यसि किं प्रिये रूपातलमूल्पाणुवेदीसिंहादिभिः समः मुष्टिग्राह्योभवेन्मध्यः अत्रमध्यस्यातिसूक्ष्मतयातत्प्राधान्येनोपमानता अत
२९ स्यमुष्टिग्राह्यतातत्प्रमाणता सूक्ष्मत्वादेवमध्येमून्यताच अतएवसदसत्संशयगोचरोदरीत्यपिवर्णयन्ति जघनंपुलिनोपमं॥यथा॥मद
नरविमेतामित्यादि पीठप्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते॥यथा॥नितम्बः स्वर्णपीठस्तेतवाङ्गुल्यश्चपल्लवाः ज्योत्स्नेन्दुपुष्पपीयूषफे
नकान्तिरस्मितंतव तपनीयशिलाशोभाकटिरित्यादि नितम्बस्तवमेदिनीत्यादि चक्रेणविम्बंयुधिपुष्पकेतुः पितुर्ज्जितंवीक्ष्यसुदर्शनेन ज
गज्जिगीषस्यमुनानितम्बमयेनकिंदुर्लभदर्शनेन विभ्रम्यवश्चारुनितम्बचक्रेदृतस्यदृक्तस्यखलुस्खलन्ती स्थिराचिराद्यस्ततदूरुरम्भा
स्तम्भातुपार्श्विष्यकरेणगाढम् रथचरणविशालश्रोणिलोलेक्षणेचेतिमाघःश्वक्रान्तारद्वयसाम्यमप्यत्र ऊरुस्तुकरिहस्तेनकदल्याकरभेनच॥
यथा॥कदलीकदलीकरभःकरभः करिराजकरः करिराजकरः भुवनत्रितयेपिविभर्त्तितुलामिदमूरुयुगंनचमूरुदृशः चरणःपल्लवाम्भोजस्थल
पद्मप्रवालकैः यथा॥विजितप्रवालपल्लवकवलीकृतप्रोल्लसत्तुस्वमे पद्मकमलेकमलायाः लुठद्दलकः पातुदेवकीसूनुः अभ्युन्नतांगुष्ठनखप्र
भाभिर्क्षिपणाद्रागमिवाद्रिरवी आजह्रतुस्तच्चरणौपृथिव्यांस्थलारविन्दश्रियमव्यवस्थाम् पूर्णेन्दुनाङ्गुष्ठनखैः॥यथा॥यशःपदाङ्गुष्ठनखैम्

स्वंच विभर्त्ति पूर्णेन्दुवत्तुष्ट्यर्थं यथा कलाश्चतुः षष्टिरुपैति वासंतस्यां कथं सुभ्रु विमाननास्यात् गमने हंसहस्तिवत्॥ यथा॥ गमनमलसयानैरित्या
दि साराजहंसैरिव संन्नतांगी गतेषु लीलाञ्चितविभ्रमेष्वित्यादौ कटाक्षोपमुनावीचिभृङ्गावलिविषामृतैः हालाहलम्वाविलसत्सुधावाभृङ्गाव
लीवायमुनोर्मयो वा निशाणघृष्टामदनेषवो वा पद्मा कटाक्षाहरिणेक्षणायाः ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरवकन्दुकः इत्यादि हसो हास्य॥ यथा
ज्योत्स्नापुष्पपीयूषइत्यादि नूनं ते चोरितातन्वि स्मितेक्षणमुखद्युतिः स्नातुमंभः प्रविष्टायाः कुमुदोत्पलपङ्कजैः मुक्ताप्रवालगणनीया मुक्ता
फलं वा स्फुटविद्रुमस्थमित्यादेः दर्शनेवमदन्तादि यथा॥ धवलपद्विजगदखिलं ज्ञावयदिषविम्बमेवविशिष्टोष्ठैः वमदिवकमलसहस्रलोच
नमणीशोजयति श्वाससुरभिसमः वहन्ति प्रातरंभोजसौरभोद्गारवासिताः मंदं मंदं मणीवातानिश्वासास्तावकाइव हंससारसशब्दाभ्यां व
र्ण्यते नूपुरध्वनिः॥ यथा॥ साराजहंसैरिवेत्यादि लीलाचलत्श्रीचरणारुणोत्पलस्फुरत्तुलाकोटिनिनादकोमलः शौरेरुपानूपमयाहरन्मनः स्व
रान्तराद्भ्रमरसारसारवः अत्र श्रीपादानुसारिकविकल्पलताकार एतावदधिकमाह वेण्याः सर्प्पासिभृंगाल्योधम्मिल्लस्य विधुंतुदः सीमन्तस्या
ध्वदण्डोचभुवोः सर्प्पकृपाणकौ दन्तस्य जीरकाद्रेयामदिषकुमुदेक्षणः जिह्वापांसलं चलोदोलानासया॥ पाटली तथा॥ वल्लरीलहरीपाशः स्व

अ०पे० लपत्राणामैत्रेतस्यानुकारिणी इत्यादि॥ विस्तृतमन्यत्र इदमुपलक्षणम्॥ आह्लादत्वपुरस्कारेण चन्द्रादिसाम्यमुभयोरपि॥ यथा॥ इति द्विजेन द्विज
२२ राजकान्तिरित्यादि इन्दुप्रभामिन्दुमतीवभाषेइति स्फुरत्कमलपत्राभ इति श्रुतयोधेप्रतापोग्न्यादिपद्माद्यैः कीर्तिश्चन्द्रादिशुभ्रकैः करेपद्मोर्ध्व
रेखादिपदेच्छत्रध्वजादिकम् गमनेहस्तिसिंहाभ्यांकार्कश्यंच भुजादिषु॥ स्फुटमिहोदाहरणम् गमनेयथा॥ पूर्वंयथादेवपतेर्नियोगमूर्जावह
न्कार्मुकबाणहस्तः प्राप्तस्तथैवाशुगजेन्द्रगामीप्रोद्भिद्यमानेननवयौवनेन ततोमृगेन्द्रस्यमृगेन्द्रगामीत्यादि स्युरुत्तरपदेव्याघ्रपुङ्गवर्षभकुञ्ज
राः सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचकाः आदिपदादृषभोपिकर्तव्यारत्नसिंहाद्या नरराजादितः पदात् विशेष्यभावोद्युसदांनरभूमिवि
शेषणात् यद्यक्तामुद्रिकायुक्तंतद्वर्ण्यमुभयोरपि किन्तुशिष्टप्रयोगोऽन्वमयाकस्पतयेष्यते॥ इत्यलंकारशेखरेपुरुषवर्णनमरीचिः॥ इदानीं
सादृश्यप्रापकप्रकाशनाह इवाद्यैः प्रतिमानाद्यैस्समानाद्यैर्निभादिभिः बन्धुचौरादिकैश्चाद्यैः सादृश्यप्रतिपत्तयः॥ तदाहुः इवादीनिति॥ इवव
द्वायथाशब्दाः समाननिभसंनिभाः तुल्यसंकाशनीकाशप्रतिमाप्रतिरूपकाः सदृक्सदृशसंवादिशब्दाः सादृश्यवाचकाः॥ प्रतिमानाद्यैरि
ति॥ प्रतिमानंप्रतिबिंबंप्रतिमाप्रतियातना प्रतिच्छायाप्रतिकृतिरर्चापुंसिप्रतिनिधिरुपमोपमानंस्यात्॥ समानाद्यैर्निभादिभिरिति॥ वाच्य

लिंगाः समानश्च सदृशः सदृक्षः सदृक् साधारणः समस्तुल्यः स्युरुत्तरपदे त्वमी निभसंकाशनीकाशप्रतीकाशोपमादयः बंधुरितिबन्धुर्मि
त्रंवयस्यश्च प्रेयान्प्रीतः सुहृत्सखा उपमानोपमेययोरेवम्॥ चौरेति॥ चौरैकागारिकस्तेनदस्युतस्करमोषकाः प्रतिरोधिपरास्कन्दिपाट
च्चरमलिम्लुचाः मुखकान्तिचौरश्चन्द्र इत्यादिकर्तव्यम्॥ अरीति॥ रिपुवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः द्विड्विपक्षाहितामित्रदस्युशात्रवश
त्रवः अभिघातिपराराति प्रत्यर्थिपरिपन्थिनः चंद्रस्य वैरि मुखं इत्यादिकर्तव्यम्॥ वंशाद्यैरिति॥ संततिर्गोत्रजननकुलान्यभिजनान्वयौ वं
शोन्ववायः संतानः सपिंडास्तु सनाभयः समानोदर्यसोदर्यसगर्भ्यसहजाः समाः सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः चन्द्रगोत्रं
चन्द्रसोदरं मुखमित्यादिकर्तव्यम्॥ प्रकारान्तरमाह॥ भृतकाद्यैश्च भृत्याद्यैर्न्यक्कारार्थैः क्रियापदैः सन्देहवत्तदाक्याद्यैः सादृश्यं प्रतिपद्यते
भृतकाद्यैरिति भृतको भृतिभुक्कर्मकरो वैतनिकश्च सः मुखस्य भृतकश्चन्द्र इत्यपि वोद्धव्यम्॥ भृत्याद्यैरित्यादि॥ भृत्ये दासेरदासेरदासगोप्य
कचेटकाः नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः मुखदासः शशीत्यादिकर्तव्यम्॥ न्यक्कारार्थैरिति॥ न्यक्करोति तिरस्कुर्वन् प्रतिक्षिपति भ
त्सीति आक्रोशत्यवजानाति कदर्थयति निन्दति विडम्बयति संरुधेच्छं सतीर्ष्यत्यसूयति त्वन्मुखं चन्द्रं न्यक्करोतीति क्षेपन् तृणीकृतमधि

अ.श्री. श्रियं निरस्तं च लघूकृतम् अनाहतमवज्ञातम् अम्भोजं यत्र तन्मुखेन्दुना ॥ सन्देहे इति ॥ यथा ॥ किमिन्दुः किं पद्ममित्यादि तत्तद्वाक्यैरिति ॥ तस्य पुष्णाति
२३ शोभां यस्य तस्य कान्तिं विलुम्पति तेन सार्द्धं विगृह्णाति तुलां तेनाधिरोहति तस्य दर्पं पदं धत्ते तस्य कक्षां विगाहते तमर्थमनुबध्नाति तच्छीलं त
न्निषेधति तस्य चानुकरोतीति तमर्थमनुविंदति आकारयत्याह्वयते जिगीषति सत्कहम् विधिरम्भोजसाम्राज्ये मुखेन्दुमभिषिञ्चति तस्य
मुखेन सह शंकं कण्टकं कर्तुमिच्छति भवतीन्दुर्नदासोपि त्वदास्यं चेत्किमिन्दुना चन्द्रमूर्ध्नि पदं धत्ते यथा चंद्र प्रतप्यसि लीयते चन्द्रमाः क्का
पि बिभेति च न पश्यते ॥ रणितु ॥ प्रतिच्छन्दसरूपादिसजातीयानुवादिनः सलक्षणसपक्षाभसवर्णतुलितादिकम् कल्पदेशीयदेश्यादिये चान्यू
नार्थवाचिनः समासश्च बहुव्रीहिः स्पर्धाकदनादिषु भवन्तीवादिशब्दाश्च सादृश्यप्रतिपत्तये ॥ इत्याह ॥ कवीनां घटनान्येव चराचरविलक्षण
भकर्तुमन्यथाकर्तुं कर्तुं वा समते जगत् ॥ इत्यलंकारशेखरे वर्णकरत्नम् ॥ इदानीं कविसंप्रदायस्य सर्वापेक्षयाभ्यर्हितत्वं दर्शयन्नाह ॥ असतो
पि निबन्धेन सतामप्यनिबंधनात् नियमस्य पुरस्कारात् संप्रदायस्त्रिधा कवेः असतोपीति वस्तुगत्या यन्न भवति तदपि कविभिर्वर्ण्यते ॥ यथा ॥ र
त्नानि यत्र तत्राद्रौ हंसा यत्र जलाशये जले भाद्यं नभोनद्यामम्भोजाद्यं नदेष्वपि तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता मुक्तत्वं कीर्तिपुण्यादौ

कार्ष्ण्यं च कीर्त्यादिषु प्रतापे रक्ततोज्ज्वलत्वे रक्तत्वं क्रोधरागयोः ज्योत्स्नापाने चकोराणां प्रवालं सर्ववीरुधाम् केसराशोकयोः स्त्रीणां गण्डूषात्पाद
घाततः मासाम्नेऽपि पुष्पाणि रोमालि स्त्रि वलि स्त्रियाम् ॥ सतामपीति पारमार्थिकमपि न निबध्यते ॥ यथा ॥ वसन्ते मालतीपुष्पं फलं पुष्पेऽपि चन्दने
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता। रागे श्यामता पातः स्तनयोर्विस्रवातयानि यमस्येति हिमवत्येव भूर्यत्वकृ चंदनं मलये परम् हेमन्त
शिशिरे पद्मकान्तसर्वदा कमलस्थितिः ॥ किंच ॥ सामान्यग्रहणे शीतं पुष्पाम्भस्त्रग्वाससाम् ध्वजचामरहंसानां हारस्य वकभस्मनोः कृसत्वं स
र्वेषु हिमे पयारि धवलीकृताम् भिल्लिकावासुराणां च धूमपंकशिरोरुहाम् लौहित्ये धातुमाणिक्यजवारत्नविवस्वताम् पद्मपल्लवबन्धूकदा
डिमीकरजादिषु पीतत्वं शालिमण्डूकवल्कलेषु परागके वर्षास्वेव शिखिप्रौढि माधवे च पिकध्वनिः ॥ अन्यच्च ॥ कमलासम्पदोः कृष्णहरितो
र्नागसर्पयोः पीतलोहितयोः स्वर्णपरागाग्निशिखासु च चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः दानवासुरदैत्यानामैक्यमेवाभिसंहितम्
॥ अपि च ॥ चिरन्तनस्यापि तथा शिवचन्द्रस्य बालता मानवामौलितो वर्ण्या देवाश्चरणतः पुनः भुवनानि निबध्नीयात्त्रीणि सप्त चतुर्दश चतस्रो
दिशो दश दिशश्चतुरः सप्त वारिधीन् अष्टादश स्मृता विद्याः चतस्रश्च चतुर्दश येऽप्यलेते जलजौ वाभिन्दन्त्यर्कं करणेमृताः महत्त्वमादिसर्गान्ते

अ.शे. सत्स्यताजगतामपि शैलादिर्भिद्यते शब्दान्नभः पूर्तिरथो द्रुमं नामतत्तदुपाधीस्यात् कुङ्कुरोवृषवाहनः विहङ्गेन वृषाङ्कोयं ध्वजे सत्वाद्वृषध्व
२४ जः शूलीन सर्प्पीगिरिशः शशीनहरिणीविधुः इन्दुमौलिर्महादेवो गंगामौलिर्न्नतु क्वचित् रलयोर्डलयोश्चैव बवयोः सशयोर्न्नभित् नानुस्वा
रविसर्गौ च चित्रभङ्गस्य सम्मतौ इ ख्वदहाहिहीहसमउतवैसुकिलैवच पदान्येतानि देयानि पादस्यादौ न जातुचित् भूतेन्द्रभारते शास्त्राक्रमह
त्ववेदानिरर्थकः दुरर्थो ब्राह्मणो दृष्टिभोज्यौ वधपथादिषु॥ इत्यलंकारशेखरे संप्रदायरत्ने नियममरीचिः॥ अथ संक्षेपेण वर्णनीयमाह॥ वर्ण्य
स्त्राराजा देवी वरे शो ग्रामः पुरी सरित् सरोऽब्धरण्योद्यानाद्रिप्रयाणरणवाजिनः हस्त्यर्कचन्द्रर्तवो विवाहो यत्स्वयंवरम् सुरापुष्पाः स्वुसम्भो
गविम्लेच्छमृगयाभ्रमाः कालान्तरं वयः सन्ध्यो ध्वान्तदूत्याभिसारिकाः॥ अेषां विशिष्य वर्णनमाह॥ नृपे कीर्त्तिः प्रतापाज्ञा दुष्टशान्तिविवेकिताः
धर्मप्रयाणसंग्रामशस्त्राभ्यासनयक्षमाः प्रजापालारिशैलादिनिवासो रिपुशून्यता औदार्यधैर्यगाम्भीर्यैश्वर्यसौन्दर्यमादयः देव्यां सौभाग्यलावण्य
शीलशृङ्गारमन्मथाः नृपाचातुर्यदाक्षिण्यप्रेममानव्रतादयः देशे बहुखनिद्रव्यपण्यधान्याकरोद्भवाः दुर्गग्रामजनाधिक्यनदीमातृकतादयः
ग्रामे धान्यलताहसरसीपशुपुष्पयः सेव्यादिरुद्रकेदारग्राममल्लीमुग्धविभ्रमाः पुरे हृत्परिखावप्रप्रतोलीतोरणध्वजाः प्रासादाध्वप्रपारामवा

कोकस्यासतीमदी सरिदम्बुधिवापिस्थावीच्योवनगजादयः पद्मानिषट्पदाहंसचक्राद्याकुलवास्विनः सर सम्भोलहर्म्यभोगज्ञायंबुजषट्प
दः हंसचक्राद्यस्तीरोद्यानस्त्रीपान्यकेलयः अब्धौद्वीपाद्रिरत्नोर्मिपोतपादोजलप्लवाः विश्रुकुल्यागमस्यन्द्राद्दिरीर्वौघपूरणम्॥ अरण्ये
हिमराज्ञिमयूरसिंहादयोद्रुगाः काकोलूककपोताद्याम्भिल्लभल्लाद्यः उद्याने सरणिः सर्वफलपुष्पलतादयः पिकालिकेलिहंसाद्याः क्रीडा
कथ्यपजास्थितिः शैलेमेघौषधीधातुवंशकिन्नरनिर्भराः मृगपादगुहारत्नवनजीवाद्युपत्यकाः प्रयाणेभेरिनिम्वानभूकम्पबलधूलयः
करभोसध्वजछत्रवणिक्शकटवेशराः युद्धेतुवर्मबलवीररजांसितूर्य्यनिर्घातनादशरमण्डपरक्तनद्यः छिन्नातपत्ररथचामरकेतुकु
म्भियोधाः सुरीवृतभटाः सुरपुष्पवृष्टिः अश्वेवेगित्वमौन्नत्यतेजः सल्लक्षणस्थितिः खुरोत्खातरजः प्रौढिजातिर्गतिविचित्रता गजेस्ते
नवायित्वमुत्तंताकर्णचापलम् अरिव्यूहविभेदित्वंकुंभेमुक्ताभदालयः॥ सूर्य्येरुणतारविमणिचक्राम्बुजपथिकलोचनप्रीतिः तारेन्दुदीपकौ
मधुलूकतमश्चौरकुमुदकुलटार्तिः चन्द्रेकुलटाचक्राम्बुजचौरविरहितमोर्तिरौज्वल्यम् जलनिधिजननेत्रकैरवचकोरचन्द्रास्मरप्रतिप्रीतिः
सुरभौदोलाकोकिलदक्षिणवातद्रुपल्लवोद्भेदाः जातीतरपुष्पचयाद्रुममञ्जरीभ्रमरभंकाराः ग्रीष्मेपाटलमल्लीतापसरः पथिकशोषवाता ४ त्का

अ॰ शे॰ सत्कुप्रपाप्रपालीमृगतृष्णाम्रादिफलपाकाः वर्षासु घनशिखिस्मयहंसगमापंककंदलोद्भेदोजातीकदम्बकेतकभञ्झानिलनिम्नगाह्लिप्रीतिः शर
२५ दि तुरविपटुत्वं जलाच्छतागस्त्यहंसवृषदर्पाः सप्तच्छदासिताभ्राब्जरुचिः शिखिपक्षमदपाताः हेमंते दिनलघुतामरुवकयवशीतसंपत्तिः॥ शिशि
रेकुन्दसमृद्धिः कमलहतिर्वीगुडामोदाः॥ विवाहे स्नानशुद्धांगभूषातूर्यत्रयीरवाः वेदीसंगीतरामादिलाजमंगलवर्णनम् स्वयंवरे शचीरक्षाम
ञ्चमण्डपसज्जता राजपुत्रीनृपाकारान्वयचेष्टाप्रकाशनम् सुरापाने विकलतास्खलनं वचने गतौ लज्जामानच्युतिप्रेमाधिक्यं रक्तासता
भ्रमः पुष्पावचये पुष्पावचयः पुष्पार्पणार्थने दयिते मालागोत्रस्खलने क्रोधो वक्रोक्तिसंभ्रमाश्लेषाः जलकेलौ सरः क्षोभश्चक्रहंसापस
र्पणम् पद्मम्लानिः पयः सेपो सिरागोभूषणच्युतिः सुरते सात्त्विकाभावाः सीत्काराः कुङ्कुमलासता कांचित्कंकणमञ्जीररवोरदनखवक्ष
ताः विरहे तापनिश्वासचिंतामौनकृशांगताः अब्दसंख्या निशादैर्घ्यं जागरः शिशिरोसता मृगयायां चसंचारो वागुरानीलवेषता मृगाधिक्यंमृ
गत्रासो हिंसेद्रावस्त्वगतित्वरा आश्रमे तिथिपूजैणविश्वासो हिंसशांतता यज्ञधूमो मुनिसुताद्रुसेको वल्कलं द्रुमाः पद्मकेकोत्सवः प्रातर्मध्या
ह्नेतापसप्लवः सायं सूर्ये तिलोहि स्यं चक्रपद्मादिविप्लवः पूर्वं त्वेग्रतनत्वं स्वसंधिं आप्योपवर्णनम् एवं शैशवतारुण्यमाध्यस्थ्यं विषमं चततू

अन्धकारेतिकाठिन्यंबिम्बलोपसमर्थता आकस्मिकसमारंभोनिःशंकमभिसारिता रसे प्रचुरशाखत्वंदलादर्शितसूर्यता उच्चताप्रसवोत्कर्षौ
वपुः पथिकसेव्यता अभिसारेभयभ्रंशोमञ्जीरादितिरस्क्रिया साहसंरागितोत्कर्षा कालानुगुणवल्लभा॥ इत्यलंकारशेखरेवर्णनीयमरीचिः
नियमान्तरमाह॥ श्वेताश्चंद्रादयोज्ञेयानीलाः श्रीकेशवादयः शोणास्तुसान्द्रधर्माद्याः पीतादीपशिखादयः धूसराअथधूल्याद्याः ज्ञातव्याः
काव्यवर्त्मनि॥ अत्रैवज्ञातव्यं॥ श्वेतानिचन्द्रशङ्खाभ्रशंभुनारदभार्गवाः हलीशेषाहिशङ्खेभौसिंहसौधशरद्घनाः सूर्येन्दुकान्तनिर्मोकमन्दा
रहुहिमाद्रयः हिमहासमृणालानिस्वर्रैण्डभरद्वाभ्रकम् सिकतामृतलोध्राणिगुणकैरवशर्कराः नीलानिकृसचन्द्राङ्कव्याससमधनंजयाः
शनिद्रुपदजाकालीराजपट्टविदूरजम् विषाकाशकुहूशल्यागरुपापतमोनिशाः रसाद्भुतशृंगारौतथापिकंचराहवः शिरिच्चिंपमोरसः कण्ठः
खञ्जनकेकिनोः हत्याछायागजाङ्गाराः खलान्तः करणादयः शोणानिसान्द्रधर्मश्चनेत्रारौद्ररसस्तथा चकोरकोकिलापाराक्तनेत्रंकपेर्मुख
म् तेजः पुष्परागस्तंचभौमकुंकुमतस्त्रकाः जिह्वेन्द्रगोपखद्योतविद्युत्कुंजरविंदवः पीतानिदीपजीवेन्द्रगरुडेश्वरसज्जताः ब्रह्मावीररसस्व
र्णकलिद्वापररोचनाः किंजल्कचक्रवाकाद्याहरितालंमनःशिला धूसराणिरजोलूताकरभोगृहगोधिकाकपोतमूषकोदुर्गाकाककंठखरादयः

अ॰ शे॰ इदमुपलक्षणम्॥ हरिताः सूर्यतुरगा बुधो मरकतादयः इत्यपि बोद्धव्यम् द्वैरूप्ये चाप्रसिद्धो च नियमोऽयमुदाहृतः अन्यद्वस्तु यथा यत्स्यात्तत्तथैवो
१६ पवर्ण्यते॥ इत्यलंकारशेखरे मुक्तादिनियममरीचिः इदानीं नियमांतरमाह एकस्माद्दाशसहस्रं च यद्यद्वस्तु यथा भवेत् तत्तत्कविप्रयोगेन ज्ञातव्यं
काव्यमिच्छता॥ अत्रैव ज्ञातव्यम्॥ एकरेन्दुः करी चाब्धौ गजास्यरदशुक्रदृक् द्वयं पक्षनदीतीरनरश्रुतिभुजादिकम् त्रयं कालाग्निभुवनगंगा
मार्गशहृग्गुणाः ग्रीवारेखा महीकोणस्तथा शूलशिखावली संध्या पुनः पुष्कराणि रामविष्णुज्वरांघ्रयः चत्वारि वेदब्रह्मास्यवर्णाब्धिहरिवाह
यः स्वर्दंतिदंतसेनांगोपाययामयुगाश्रमाः पंचपांडवरुद्रास्येन्द्रियस्वर्द्रुव्रतादयः महाभूतमहापापमहाकाव्यमहामखाः पुराणलक्षणं प्राण
मिषावर्गेन्द्रियार्थकाः षडूज्रकोणत्रिशिरोनेत्रतर्काङ्गदर्शनम् चक्रवर्तीमहासेनवदनानि गुणा रसाः सप्त पातालभुवनमुनिद्वीपार्कवाजिनः
वाराश्वस्वरराज्यांगव्रीहिवह्निशिखादयः अष्टौ योगाङ्गवस्वाशामूर्तिदिग्गजसिद्धयः ब्रह्मश्रुतिव्याकरणदिक्पालाहिकुलाद्रयः नवांगद्वार
भूखण्डकृत्तरावणमस्तकाः व्याघ्रीस्तनसुधाकुण्डशृङ्गारादिरसग्रहाः दशहस्तांगुलीशंभुबाहुरावणमौलयः कृष्णावतारोदिग्विश्वेदेवाव
स्थेन्दुवाजिनः एकादशमहादेवाः सेनाश्चकुरुभूपतेः द्वादशार्कराशिमाससंक्रांतिगुहबाहवः शारिकोष्ठकसेनानीनेत्रसभापतिमंडलाः त्र

षोडशस्युस्तांबूलगुणाअथचतुर्दश विद्यान्वयमन्वराश्चैवभुवनधुवतारकाः तिथयःस्युः पंचदशषोडशेन्दुकलास्मृताः अष्टादशद्वीपविद्यापु
राणस्मृतिधान्यकम् विंशतीरावणभुजानेत्राद्ययशतंतथा धार्तराष्ट्राः शतभिषकृतारकापुरुषायुषम् रावणांगुल्यब्जदलंयज्ञपत्राब्धियोजन
म् सहस्रंजाह्नवीवक्त्रशेषशीर्षाम्बुजच्छदाः रविरश्म्यर्जुनकरवेदशाखेन्द्रदृष्टयः उदाहरणमेतेषांप्रसिद्धत्वान्नलिख्यते प्रहृतेकेवलंपांथा
मादृशाः काव्यवर्त्मनि॥इत्यलंकारशेखरेसंख्यानियममरीचिः॥ इदानींप्रकारमुपदिशन्नेवकवीनांप्रकर्षबीजमाह॥गतागतंसमत्वंचसंस्कृ
तप्राकृतैक्यताम् तथावचनयोःसाम्यंधर्मिधर्माभिधापिच कवयःकुर्वतेशक्ताः समस्यापूरणादिकम् आदिचतुष्टयंचित्रकाव्योपकारक
म्॥तद्यथा॥ममरुरुमध्यमसहासकारिकावरखवनदानवसरसीरसगजभुजगतरुणीरुतरदसोदरनदभेदनवरभैरवकलपुलकपतदात
पहस्यादिः चकारादसाम्येकविस्फुटतार्थता राजानदीमालिकाराजतेदीनरक्षीपिनाकिनानन्दनवमसहसात्सनुतइत्सादिः रेजिरेवभूवतिष्ठती
त्याख्यातेसंस्कृतेत्यादियथा॥तत्रपुल्लिङ्गे॥हाराहारविहारसारसमराः संभोगभोगाध्वराः संहारामरवारवारणरणाष्टंहारवीराकराः लोलोल्ला
पविलासवापसहरा हंकारहीरांकुरानीहारोरगतारगतरलागोविन्दकन्दोदनाः॥स्त्रीलिंगे॥धरणीधारणीगोणीरोहिणीरमणीमणी कंदलीलह

अ॰चे॰ रीरंभानत्नीभेरीवसुंधरा॥नपुंसके॥जलफलपलमूलंवारिकीलालतूलंवलपललदकूलंतिंगगंभीरकूलम् सलिलकपलंचीरंतुच्छराजीवनीरंहलरज
२७ तकुटीरंवारुनालंपटीरम् भणगच्छदेहिसंहरकुरुरोचयमारयावगच्छेहि अवलोकयावचिन्तयधारयस्वादयेतिधातुजंविद्धि अेकस्मिन्नेवार्थे
बहुवचनैकवचनयोः॥साम्यंयथा॥ क्रव्यादोदेषिरोवारिफलिनोवर्हिणोनरः तादृशोभूरुहाद्याश्चमासफेरवसोमपाः एवंरथिमंथानशब्दाःसु
रणशावयः धर्मिधर्माभिधायिपदंयथा सुषिराद्रिप्रतीहारवुल्लपिल्लादिशात्रवः स्मेरालसौमत्सरश्चधर्मिधर्माभिधायकाः चकाराद्विशेषसामान्य
वाचकभावाभाववाचकपरिग्रहः॥ तदुक्तम्॥ शकुन्तधातुमरुतोगरुत्मत्कामदर्शनम् स्वच्छवंधूस्वगमनंचटकाद्याद्विवाचकाः अपिधाना
वपूर्वादिभावाभावप्रदर्शनम् आदिपदात् आराद्युतभिन्नअवतंसादिपरिग्रहः॥इत्यलंकारशेखरेचित्रकाद्युपकारमरीचिः॥ समस्यापूरण
क्रिकमिति इदंतुकठिनसमस्याभिप्रायेणतदुक्तंकवयः शान्ताः तत्रैवंप्रकारेणयदीदंस्यात्तदेदंस्यात्कर्ताविषयमेतिच अयोग्यः खलुकःशब्दः
कुत्रसंसर्गधीर्नहि प्रस्तोत्तरात्पदेभङ्गात्पूर्वस्मिन्नाद्ययोजनात् मिथ्याभिधाप्यसावेवअेषसार्वत्रिकः क्रमः॥प्रस्तेति॥केमण्डयन्तिस्तन
मण्डलानिकीदृश्युमाचन्द्रमसः कुतःश्रीः किमाहसीतादशवक्त्रनीताहारामहादेवरतातमातः॥पदेति॥मृगात्सिंहः पलायते मृगमत्तीति

मृगात् लेपनतापमांसयइत्यर्थःकरणात् पूर्वस्मिन्निति प्रत्यर्थिकीर्तिनिर्जितकज्जलधवलेयावककुसुममितिभावत् यथायथभावान्तरप्रकार
गम्
स्तु ओतत्त्वप्रेमपारदृष्टविधिन्यस्तत्रिलोकाताम् अरिष्टमेवतत्संजातमिंद्रजालेविभावय प्रबोधयतिबालोऽपयथायो ।प्रपूरयेत् सुबोधमिदम् प्र
कारान्तरेदेवर्षिवरशापादेर्मेघविमर्दिनपथादिभिः मनोरथेनतपसाम्बयात्पुण्यचयेनच मायपाशंवरादीनांसर्वसंभावयेत्कविः तत्रदृढरूपम् त
थस्तत्कालिकंपुण्यम्॥थोपादस्तु॥रागवात्सल्यशोकादेर्विनयेनमदेनच मतिभ्रमेणशौर्येणविपरीतकरः पुमानित्यादि॥विशेषस्तु॥कस्मा
यव्याण्डसंसर्गप्रसिद्धवस्तुष्वणुर्महान् युगान्तेचातिदूरोऽप्यनिकटेमहदप्यणुः हरेदृधोमुखत्वेतुविम्बाच्चविपरीतता दृक्पीडनात्तनुमूहाद्वा
धनाविम्बतोयवु तमोः कौमुद्यादिभिः कार्ष्ण्यशौक्ल्यंज्योत्स्नादिकीर्तिभिः लौहित्यंरक्तपीतादिसन्ध्यास्त्रकरादिभिः तिमिरंद्भुताप्रयुक्तचक्षुर्म्मा
यम् दूर्पवशेसोयतिपिपीलिकाइत्यादि मशकोयतिकुञ्जरइत्यादि विपरीतोभवज्जनइत्यादि एकोपिसशतंनृपइत्यादि मषीयतिजगन्त्र
यमित्यादि भेकत्रिपाद्यतेजगत् पद्मरागायतेजगत् क्रमेणवोद्भ्रम् कासांचित्समस्यानांनानाभुवनसंसर्गित्वात् तत्प्रकारः प्रदर्श्यन्ते ज
गतः प्रलयेभूमिर्योगीहस्तम्बुधावृतौ बलीन्द्रोहाटकेशीयपाताळपादेरसातले रसातलेइतितृतीयान्यपी॥यथा॥दोर्विवेनजलेशार्ङ्गीत्वब्धि

अ०शे० मंथेद्वयंभुवि भुवीत्युभयान्वयी। पातालं वारणैः क्षिप्रे चन्दनद्रुमपन्नगैः ध्वजप्रासादधूलीभिर्भूमिः स्वर्गमुपाययौ। श्रीकृष्णस्योदरे सर्वसंसर्गः सार्व

२८ कालिकः पातालं भूमिश्च स्वर्गं ययावित्यन्वयः अगस्त्यंभोब्धिपानादिपौराणिककथाशतैः शिवादिदेवसंचारैस्तादृश्यैस्तत्र्वर्णनम् शिवादीति

यत्र शिवोपातितत्रतत्रान्तरीयकतया सर्प्यचन्द्रानलादीनामपिगमनमवश्यकमित्यर्थः सादृश्यैरिति लक्षणायां सूच्यग्रे पर्वतद्वयमित्यादौ

औचित्येन संग्रामे कुम्भिमुक्ताभिर्दिवा तारकितं नभः॥ राजशेखरस्तु॥ उत्पाटितैर्नभोनीतैः शैलैरामूलबन्धनात् तांस्तानर्थान्समालोच्य सम

स्यां पूरयेत्कविरित्याह॥ वृद्धास्तु॥ कः प्रत्येति प्रतीमो न द्राक् प्रत्येमि प्रतीहि च नहि नो तत्क्किमित्याद्यैरुक्तिमाश्रित्य पूरयेत्॥ तथा॥ पराजितश्चे

द्भगवान् जरासंधेन जंतुना प्रतीतिरद्यमे याता मृगात् सिंहः पलायते मा संभावय शल्येन फाल्गुनस्य पराजयम् कः प्रतीयात्कुरुश्रेष्ठ मृगात्

सिंहः पलायतेत्यादि नहि गांडीवकोदण्डो मृगादित्यादि तत्किं कमलपत्राक्ष मृगात् सिंहः पलायते सुबोधमखिलम् शब्दानुकूलितैः सिन्धौ

शैलाण्डादौ विदारिते त्वत्प्रतापाद्द्रवीभूते स्वर्णाद्रौ मलिने रवौ। विरहे सर्वदहनः संतोषे सर्वमेव शशी। कामिनि सर्वकाम्यं शान्ते लोष्ठायते विभ्रम्

वैशेषिकेषु काव्येषु गुणेषूत्कृष्टमन्दयोः अपेक्षया च तं सर्गे स्यातामुत्कृष्टमन्दते वैशेषिकेषु रूपादिपञ्चसु काव्ये शौर्यौदार्यसौन्दर्यादिषु

अपरिकलितकाव्यसरणिमीमांसंवशीकर्तुमनतिचिरमनुसरन्कविः अन्वयैरजहल्लिंगैः साधारणविशेषणैः छन्दोज्ञात्वा पृथग्वाक्यैः स्वबुध्यामान
शीघ्रयेत् समस्यापदंवाक्यंस्मर्तव्यम् शिशूनांगतये स्वाभिर्दिङ्मात्रमिहदर्शितम् काव्यकान्तारपान्थानामीदृगर्थेकृपाश्रमः॥ इत्यलंका
रशेखरेकविसामर्थ्यरत्नम्॥ रसआत्मेत्युक्तम् तत्रयथात्मानंविनाशरीरमप्रयोजकम् तथारसंविनाकाव्यम् तथाह साधुपाकेप्यनास्वाद्यंभो
ज्यंनिर्लवणंयथा तथैवनीरसंकाव्यंनस्याद्रसिकतुष्टये तत्ररसत्वमंगांगिभावापन्नसकलविभावादिसाक्षात्कारकत्वम् विशेषणंसमूहालं
बनवारणायरसत्वजातिरितिवयम्॥ केचित्तु॥ कारणेनाथकार्येणसहकारिभिरेवच व्यक्तत्वंनीयमानस्तुस्थायीभावोरसःस्मृतः कारण
मंगनानवयौवनादिकार्याणिस्तंभःस्वेदोथरोमाञ्चः स्वरभङ्गोथवेपथुः वैवर्ण्यमश्रुप्रलयावित्यष्टौसात्त्विकामताः सहकारिणउद्यानादयः ग्ला
न्यादयः॥ यदाहुः॥ विभावैरनुभावैश्चसात्त्विकैर्व्यभिचारिभिः आरोप्यमाणउत्कर्षंस्थायीभावोरसः स्मृतः॥ तमिदानींविभजते॥ शृंगारहास्य
करुणरौद्रवीरभयानकाः बीभत्साद्भुतशान्ताश्चकाव्येनवरसाः स्मृताः भक्तिप्रश्रयस्तुसुखज्ञानात्मरसवादिमतेनभवत्येवेतिदिक्॥ तत्रशृं
गारंविभजते॥ संभोगोविप्रलंभश्चशृङ्गारोद्विविधःस्मृतः तत्रस्त्रीपुंसलक्षणेदृष्टप्राप्तेरतिरेवसंभोगः॥ तदुक्तम्॥ अनुरक्तौनिषेवेतांयत्रान्योन्यं

अ॰शे॰ विलासिनौ दर्शनस्पर्शनादीनि संभोगोयमुदाहृतः तत्र नायिकाश्रयसंभोगो यथा॥ शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्राव्याज
२६ मुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गंडस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता अथो
[illegible]मुत्पन्नयः॥ नायिका चतुर्धा॥ अनूढा च स्वकीया च परकीया च वराङ्गना त्रिवर्णिनः स्वकीयास्याद्न्याः केवलकामिनः॥ तत्र॥ अनुरक्ता
[illegible]स्वयंयासी कृता भवेत् सानूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला देवतागुरुसाक्ष्येण स्वीकृता स्वीयनायिका परकीयाप्यनूढैव विशेष
स्तु स्फुटस्तयोः सामान्यवनिता वेश्या भवेत्कपटपण्डिता नहि कश्चित्प्रियस्तस्या दातारं नायकं विना अस्याः प्रकाशोऽन्यासां प्रच्छन्नो रमण
इति विशेषः ताश्चाष्टधा खण्डितोत्कण्ठिता प्रोषितपतिका चाभिसारिका कलहान्तरिता वासकसज्जा विप्रलब्धिका स्वाधीनभर्तृका चान्याश्चत
[illegible]धामताः नायकाश्रयो यथा॥ त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकां स्पृशि श
य्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यातः शनकैरलीकवचनोपन्यासमालीजनः रूपसौभाग्यसंपन्नः कुलीनः कुशलो युवा॥
[illegible]वक्ता नायकः प्रीतये स्त्रियाः अयं बहुप्रकारोपि संक्षेपेण चतुर्विधः॥ अनुकूलो दक्षिणश्च शठो धृष्टश्च ते यथा लीनरागोनुकूलः

स्यादन्यरमणीरतः दक्षिणः कान्ताविधेयोपि यः स्याद्विकृतः स्त्रियाम् प्रियंवदन्नप्रियं तस्याः कुर्वन्नविकृतीशठः धृष्टोज्ञातापराधोपिनविल
क्षोवमानितः॥ विप्रलम्भस्तु॥ भावोयत्र रतिर्नामप्रकर्ष मभिगच्छति नाधिगच्छतिचाभीष्टं विप्रलंभः सउच्यते अभीष्टंस्त्रीपुंसलक्षणमेव स
चपूर्वानुरागमानप्रवासकरुणात्मकः विप्रलम्भश्चतुर्द्धास्यात्पूर्वंपूर्वोह्ययंगुरुः॥ तत्र॥ स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः ज्ञेयः पूर्वा
नुरागोयमप्राप्ताविति कामयोः॥ यथा प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्तामुग्धदृशोनिसर्गमधुराश्चेष्टाभवेयुर्म
यि मानसः करणस्यबाह्यकरणस्यापारोधीसणादाशंसापरिकल्पितास्वपिभवत्यानंदसान्द्रोलयः अथान्यावनिताशक्तमवगम्यस्ववल्ल
भम् ईर्ष्यावशेनवैमुख्यमेयमानउदाहृतः॥ यथा॥ सापत्युः प्रथमापराधसमयेसख्योपदेशंविनानोजानातिसविभ्रमाङ्ग-वलनावक्रो
क्तिसंसूचनम् स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पलावालाकेवलमेवरोदितिलुठल्लोलालकैरश्रुभिः प्रवासः परदेशस्थेदितीये
विरहोद्भवः यथा॥ त्वामालिख्यप्रणयकुपितांधातुरागैः शिलायामात्मानंतेचरणपतितंयावदिच्छामिकर्त्तुम् अस्रैस्तावन्मुहुरुपचितैर्दृष्टि
रालुप्यतेमेक्रूरस्तस्मिन्नपिनसहतेसंगमंनौकृतान्तः॥ इत्यादि॥ स्यादेकतरपंचत्वेदंपत्योरनुरक्तयोः शृङ्गारः करुणाख्योयमजस्येवरतेरि

अ॰शे॰ व नंनुशृङ्गारस्यरतिप्रकृतित्वात्तस्याश्चसुखसंवेदनरूपत्वात्तस्यच विप्रलंभेः भावात्सकथंशृङ्गारभेदइतिचेन्नधन्योहमस्याः कृतेदृशामि
३० मामनुभवामिइतितत्रापितदभिधानात् कचित्संभोगपोषकत्वेनस्पृहणीयत्वाद्योतितंविस्तृतंमयैववाक्यरत्ने॥श्रीपादस्तु॥रतिर्भवतिदेवा
दौमुनौपुत्रेनृपेगुरौ शृङ्गारस्तुभवेत्सैवयाकान्ताविषयारतिः॥तत्रदेवेयथा॥कण्ठकोणविनिविष्टमीशतेकालकूटमपितेमहामृतम् अप्यु
पात्तममृतंभवद्वपुर्भेदवृत्तिपदियेनरोचते॥मुनौयथा॥हरत्यघंसंप्रतिहेतुरेष्यतः शुभस्यपूर्वाचरितैः कृतंशुभैः शरीरभाजांभवदीयदर्श
नंव्यनक्तिकालत्रितयेपियोग्यताम्॥पुत्रे॥एह्येहिवत्सरघुनंदनपूर्णचंद्रचुंबामिमूर्द्धिसुचिरंचपरिषजेत्वाम् आरोप्यवाहृदिदिवानिश
मुद्वहामिवन्देथवाचरणपुष्करकंद्वयंते॥नृपेयथा॥तेकौपीनधनास्तएवहिपरंधात्रीफलंभुंजतेतेषांद्वारिमदन्तिवाजिनिवहास्तैरेवलब्धा
क्षितिः यैरेतत्समलंकृतंनिजकुलंकिंवाबहुब्रूमहेयेदृष्टाः परमेश्वरेणभवतातुष्टेनरुष्टेनवा॥गुरौयथा॥हातातविश्वजनवत्सलमामकी
नजीवौषधयुमणिवंशवतंसभूत स्यांचेद्गुवस्कुलजसद्मनिचेटकः स्यांयद्वाभवच्चरणपंकजरेणुरेव हासमूलः समाख्यातोहास्यनामार
सोवुधैः चेष्टाङ्गवेषवैकृत्याद्धास्योहासस्यचोद्भवः कपोलासिकृतोल्लासोभिन्नोष्ठः समहात्मनाम् विदीर्णास्यस्त्वमध्यानामधमानांसशब्द

कः॥ यथा॥ मधुसङ्कमितिस्नात्वाप्रियायैप्रेषितंमनः तत्रतत्रैवरमतेहताः पाणिनिनावयम् शोकोत्थः करुणोज्ञेयस्तत्रभूपातरोदनं वैवर्ण्य
मोहनिर्वेदप्रलयाश्रूणिवर्णयेत्॥ यथा॥ मदेकपुत्राजननीजरातुरानवप्रसूतिर्वरटातपस्विनी गतिस्तयोरेषजनस्तमर्दयन्नहोविधेत्वांकरु
णारुणद्धिनो क्रोधात्मकोभवेद्रौद्रः क्रोधः प्रोक्तश्चवैरिणः भीष्मवृत्तिरसामान्योभवेदुग्रक्रियामयः स्वांसघातस्वयंशस्त्रोत्क्षेपभ्रुकुटयस्त
था अत्रारातिजनाक्षेपस्खलनंचोपवर्ण्यते॥ यथा॥ कृतमनुमतंदृष्टंवायैरिदंगुरुपातकंमनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः नरकरिपु
णासार्द्धंतेषांसभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमिदिशांवलिम् उत्साहात्माभवेद्वीरोवलशास्त्राश्रयश्वसः नायकोऽत्रभवेत्सर्वै
श्लाघ्यैरभिमतोगुणैः॥ यथा॥ क्षुद्राः संत्रासमेतेविजहतहरयोभिन्नशक्रेभकुंभायुष्मद्देहेषुलज्जान्दधतिपरममीसायकानिष्पतन्तः सौ
मित्रेतिष्ठपात्रंत्वमसिनहिरुषांनन्वहंमेघनादः किंचिद्भ्रूभङ्गलीलानियमितजलधिंरामनन्वेषयामि भयानकोभवेद्भीतिप्रकृतिर्घोरव
स्तुजः सचप्रायेणवनितानीचवालेषुदृश्यते दिगालोकास्यशोषाङ्गकम्पगद्गदसंभ्रमाः स्तंभवैवर्ण्यमोहाद्यावर्ण्यन्तेविबुधैरिह॥ यथा॥
ग्रीवाभङ्गाभिराममुहुरनुपततिस्यन्दनेवद्धदृष्टिः पश्चार्द्धेनप्रविष्टः शरपतनभयाद्भूयसापूर्वकायम् शष्पैरर्द्धावलीढैः श्रमविवृ

अ०शे० तमुख्यमंसिभिः कीर्णवर्त्मा यस्यास्यग्रपुतत्वाद्दिपतिवहुलं स्तोकमुर्व्यांप्रयाति बीभत्सः स्याज्जुगुप्सातः सोहृद्य श्रवणेक्षणात् निष्ठीवनास्यभं
३१ गाक्षिसंकोचनमहतांनच ॥ यथा ॥ उत्कृत्योत्कृत्यकृत्तिं प्रथममथपृथूत्सेधभूयांसिमांसान्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रगंधीनि
जग्ध्वा आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थापुटकगतमपिक्रव्य मव्यग्रमत्ति विस्मयात्माद्भुतोज्ञेयः
सत्वासंभाव्यवस्तुनः दर्शनाद्भुवणाद्वापिप्राणिनामुपजायते तत्रनेत्रविकारः स्यात्पुलकः स्वेदएवच निस्पन्दनेत्रतासाधुसाधुवादास्तथाम
ताः चित्रेकनककलतायांशरदिन्दुस्तत्रखंजनद्वितयंतत्रचमनोजधनुर्णितदुपरिगाढांधकाराणि सम्यज्ज्ञानसमुत्थानः शान्तोनिस्पृहनाय
कः रागद्वेषपरित्यागेसम्यग्ज्ञानस्यचोद्भवः पश्चात्तापः शरीरादिर्यावहस्तुविडंवनम् विवेकचित्तस्थैर्यादियोगाद्या स्तस्यलक्षणं ॥ यथा ॥ अ
हौवाहारेवाकुसुमशयनेवादृषदिवामणौवालोष्टेवावलवतिरिपौवासुहृदिवा तृणेवास्त्रैणेवाममसमदृशोयांतुदिवसाः क्वचित्पुण्यारण्ये
शिवशिवशिवेतिप्रलपतः [illegible] अत्राहिरियहारोहेयेनतुहारवदहिरप्युपादेयइतिवोद्धव्यम् अत्रसर्वत्रतत्तद्रसत्वमात्रेउदाह
रणमितिमन्तव्यम् इदानींरसानामविरोधविरोधावाह शृङ्गारहास्यौकरुणवीभत्सौवीररौद्रकौ भयानकाद्भुतौमित्रेमिथः शान्तोनकस्य

विव् शान्ते करुणे बीभत्से न [illegible] शृङ्गारे वीरे करुणे हास्य [illegible] रिपुः अत्र करुणबीभत्सयोर्मैत्री विशेषाभिप्रायेण स्मर्तव्यम्॥
स्थायिभावेषु [illegible] रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा जुगुप्साविस्मयौ भावा निर्वेदः स्थायिनो नव स्थायिनो भावा नवेत्यर्थः
ननु निर्वेदस्य कथं शान्तरसस्थायित्वमभिचारित्वादिति चेन्न अधिकरणभेदेनोभयाविरोधादित्यन्यत्र विस्तरः स्थायिलक्षणं तु विरुद्धैरविरुद्धै
र्वा भावैर्विच्छिद्यते न यः आत्मभावं नयत्यन्यान् स स्थायीभावः स उच्यते यथा लवणाकरः विरुद्धैर्जुगुप्सादिभिरविरुद्धै रत्यादिभिर्योन विच्छिद्यते
॥ विशेषलक्षणं तु॥ मनोनुकूलविषयसुखात्मकं संवेदनं रतिः अङ्गक्रीडादिभिश्चेतोविकारो हासः इष्टनाशादिजनितं चित्तवैक्लव्यं शोकः प्र
तिकूलेषु तैक्ष्ण्यप्रबोधः क्रोधः कार्यारंभे स्थिरसंरंभ उत्साहः व्याघ्रादिदर्शनादिजनितं मनः क्लैव्यं भयम् दोषदर्शनात्पदार्थे गर्हणं जुगुप्सा लो
कसीमातिक्रान्तपदार्थविषयश्चित्तविकारो विस्मयः तत्त्वज्ञानादीर्ष्यादिभिः स्वावमाननं निर्वेदः एते च सर्वभावेषु मुख्याः यदाह॥ यथा नराणां
नृपतिः शिष्याणां च यथा गुरुः तथा सर्वेषु भावेषु स्थायीभावः स्मृतो महान् विभावो द्विविधः उद्दीपन आलंबनश्च तत्र कोकिलवसन्तादिरुद्दीप
नः नायिकादिरालंबनः येषामपि अस्माकं मते रतित्वादिकमनुभावत्वादिकं जातिरेव नहि वैशेषिकादिवदस्मत्प्रक्रियेति॥ अनुभावलक्षण

अ॰शे॰ न्तु॥अनुभवोविकारस्तुभावसंसूचनात्मकः॥तत्र॥हेलाविच्छित्तिविव्वोककिलकिंचितविभ्रमाः लीलाविलासोहावश्चविक्षेपोविहृतोमदः
३२ मोट्टायितंकुट्टमितंमौग्ध्यश्चतपनंतथा ललितंचेत्यमीहावाश्चेष्टाः शृङ्गारभावजाः एतच्चास्माभिरेवप्रपंचितमन्यत्र॥सात्विकलक्षन्तु॥
विशेषेणाभितः कार्येस्थापिनभावयन्तिये अनुभूतादिहेतूंस्तान्वदन्तिव्यभिचारिणः आदिपदात्स्वेदादिपरिग्रहः तेचनिर्वेदग्लानिशं
कास्तथासूयामदश्रमाः आलस्यंचैवदैन्यंचचिंतामोहस्मृतिधृतिः व्रीडाचपलताहर्षश्चावेगोजडतातथा गर्वोविषादऔत्सुक्यंनिद्राप
स्मार एवच सुप्तंविबोधोमर्षश्चाप्यवहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथामरणमेवच त्रासश्चैववितर्कश्चविज्ञेयाव्यभिचारिणः अमी
षप्रत्येकंभाव्यतेक्वचित्सर्वभावतापि यथाक्वाकार्येशशलक्ष्मणइत्यादौ अत्रक्वाकार्य्यमितिवितर्कः भूयोपिदृश्येतसैत्यौत्सुक्यम् दोषाणा
मितिमतिः कोपेः पीतिस्मृतिः किंवक्ष्यतीतिशंकास्वप्नेपिसादुर्लभेतिदैन्यम् चेतःस्वास्थ्यमुपेहीति धृतिः कः खल्वित्यादिचिन्ता॥इत्यलंका
रशेखरेरसमरीचिः॥परेरसदोषाभावानुकूलवर्णादयः काव्यशरीरमनइत्युक्तमतोरसदो षानिदानीमाह॥स्वस्वशब्दैरुपादानेभावस्यचरस
स्यच कष्टप्रकल्पनीयत्वः मनुभावविभावयोः प्रकृतेरसवैरित्वन्तेषांव्यक्तिविपर्ययः अनौचितीत्यसर्वत्ररसेदोषाःस्युरीदृशाः सामान्यतो

विशेषतो वा स्वस्ववाचकशब्दप्रतिपादकानां निर्वेदादीनां रत्यादीनां वा रसाननुगुणत्वमिति सकलानुभवसिद्धं॥ तत्र व्यभिचारिणः स्वस्वशब्दोपा
दानम् यथा॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि सेर्ष्या जह्नुसुतावलोकनविधौ दीना
कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः सव्रीडा नयननिपातनात् अत्र व्रीडादीनां स्वस्वभावप्रतिपादितानां चमत्कारज
नकत्वस्य सहृदयसाक्षिकतया तदभावे रसभंग इत्युचितम् एतदेव प्रत्युदाहरणं प्रतिपादयन्ति व्यानम्रा दयितानने मुकुलिता मातङ्गचर्मा
म्बरे सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदर इत्यादि॥ स्थायिनो यथा॥ संप्रहारैः प्र
हरणैः सहाराणां परस्परम् भणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् संप्रहारः संग्रामः अत्रोत्साहस्य रसस्य रसशब्दस्य प्रतिपादित
स्वरसाजनकत्वम् यथा॥ तामनङ्गजयमंगलश्रियं किंचिदुच्चभुजमूलशोभिनीम् नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः शृ
ङ्गारेति प्रतिपादितस्य यथा॥ आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्तिम् पश्यैष बाल्यमतिवृत्य विवर्तमाना
नशृङ्गारसीमनि तरङ्गितमातनोति॥ अनुभावस्य कष्टकल्पनीयत्वं यथा॥ कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यू

अ०१० नः लीलाशिरोंऽशुकनिवेशविशेषकॢप्तिर्व्यक्तस्तनोन्नतिरभून्नयनावनीसा ॥ अत्रचन्द्रोदयउद्दीपनविभावाः शृङ्गारयोग्यानुभावप्रतीत्यास्वा
३२ [illegible]पिनः स्थिताः यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथापितस्यनव्यक्तिप्रयोजकत्वेनोपादानादनुभावत्वापर्य्यवसानम् ॥ य
द्वा पुनिश्चयेवशृङ्गारः प्रतिपिपादयिषतः अभून्नयनावनीसेत्यनेनतस्यैवालम्बनत्वप्रतिपादनात् नचपुंसिकश्चिदनुभावउपात्तः नच
विभावैराक्षेपाद्दविकष्टेनकल्पनीयः ॥ विभावस्ययथा ॥ परिहरतिरतिं मतिंलुनीतेस्खलतितरांपरिवर्ततेचभूयः इतिवतविषमादशास्य
देहंपरिभवतिप्रसभंकिमत्रकुर्मः इत्यनेनप्रकारेणास्यदशादेहंपरिभवतिइत्यन्वयः अत्ररतिपरिहारादीनामनुभावानांकरुणादावपि
संभवनात्कामिनीरूपोविभावोप्यत्रप्रतिपाद्यः प्रकरणादिसापेक्षत्वात् ॥ प्रकृतरसविरोधिविषयकोविभावादिः ॥ तत्रविभावव्यभिचा
रिणामुदाहरणम् यथा ॥ प्रसादेवर्त्तस्वप्रकटयमुदंसंत्यजरुषंप्रियेशुष्यन्त्यंगान्यमृतमिवतेसिञ्चतुवचः निधानंसौख्यानांक्षणमभिमुखं
स्थापयमुखंनमुग्धेप्रत्येतुंप्रभवतिगतः कालहरिणः अत्रशृङ्गारेप्रतिकूलस्यशान्तस्यानित्यताप्रकाशनरूपोनुभावः तत्रप्रकाशितोनिर्वेदस्य
व्यभिचार्युक्तियुक्तेः शान्तेनिर्वेदस्यस्थायित्वात् ॥ व्यक्तिविपर्ययइतिपदांशौतद्वर्णनमनुचितंचेति ॥ तत्रतद्वर्णनम् ॥ व्यक्तयोदिव्याः अदिव्या

दिव्यादिव्याश्च तत्र दिव्यत्वममर्त्यैकरूपकता यथा॥ शिवादेः शेषादेः अदिव्यत्वं यथा माधवादेः दिव्यादिव्यत्वं श्रीकृष्णादेः त्रिविधा अप्येताश्चतु
र्विधा भवंति वीररौद्रशृंगारशांतरसप्रधानाः धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः यथा॥ रामभार्गवश्रीकृष्णजीमूतवाहनाः अेते चोत्त
ममध्यमाधमभेदाद्द्वादशविधा भवन्ति तत्र स्वः पातालगमनसमुद्राद्युल्लङ्घनपर्वतस्फोटनाद्युत्साहो दिव्येष्वेव वर्णनीयः अदिव्येषु तु यावदेव लो
कप्रसिद्धमुचितं तावदेव वर्णनीयम् अनौचितीच महान् सदोषः स च भवानीशंकरादीनां पित्रोर्वा केलिवर्णनम् असमुक्तिर्वा नभः साम्यस्त
नादस्य वित्यनौचिती इत्यनेनाः स्तिवर्णनम् यद्यपि कुमारसम्भवे कालिदासेन वर्णितम् तथाप्यर्वाचीनैर्न कर्तव्यम् न हि गजादीनामुदर्ष्य
स्तेजोवटकादमशितेपचतीत्यमरादीनामुदर्ष्येण तैजसा तथा भवितव्यमिति न्यायात् तस्यापि दोषत्वाद्बहुदोषान्वक्तुम्वदन्ति शेषेव्य
क्तिविवेकोऽसुकविलोकविलोचने काव्यमीमांसिकप्राप्तमहिमा महिमाह्तः॥ यदाह महिमा॥ अनौचित्यादृते नान्यद्रसभंगस्य कारण
म् प्रसिद्धौचित्यमूला हि रसस्योपनिषत्परा ईदृश इत्यनेनान्येनौचित्यहेतवो दोषा भवन्तीति दर्शितम्॥ यथा॥ नायिकायामानादिना च
रणप्रहारादिनावानायकस्यात्यन्तिककोपादिवर्णनम् व्यक्तिविपर्ययानौचित्ययोरवान्तरभेदविवक्षया भेदः अमीषां क्वचिददोष

अ.चं. तापि यत्र नरसहानिर्भवति तद्यथा सहृदयैरेव पर्यालोचनीयमिति ग्रंथगौरवभयान्नेह तन्यत इति॥ इति श्रीमाणिक्यचन्द्रविरचिते संके
३५ तशेखरे रसदोषमरीचिः॥ उद्दामावीररौद्रादौ रुदादीरीत्यात्वरादयः हृद्याः शृङ्गारहास्यादौ परयोर्मध्यमा गतिः इदानीमनुकूलान्वर्णनीयाना
ह. वीरादावित्यादिपदेन भयानकस्य हास्यादावित्यत्र करुणस्य परिग्रहः परयोर्वीभत्साद्भुतयोः शान्तस्य नियमो नास्तीति हृदयम्॥ उद्दामेति च
न्द्र-द्वंडकहंसिलग्धरादिरीतिर्गौडी अक्षरेषु श्रीपादः उद्दामाः स्वान्तरालेन सजातीयेतरेण च योगाद्याश्चैव चत्वारः शेषा विकटगुम्फना हृद्या
उभेन्द्रादि छंदद्वहरीतिर्वैदर्भी अक्षरेषु पुनः स्तु एवं नसौ च लध्वन्तरीतौ नश्चोपर्यनुनासिकः असमासोल्पसमासो वा हृद्यं स्यात्तत्संधिसौख्यव
तश्च यथा॥ अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः कुर्वंति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तितानि अत्र वैपरीत्यं दोषा
येति मनसि कृत्वा क्वचिद्दोषतामाह वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् रचनावृत्तिवर्णानामन्यथात्वमपीष्यते॥ यथा॥ मन्थायस्ता
र्णवाम्भः प्लुतकुहरचलन्मन्दरध्वानधीरः कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः कृष्णाक्रोधाग्रदूतः कुरुशतनिधनोत्पातनि
र्घातवातः केनास्मत्सिंहनादप्रतिरसितसखो दुंदुभिस्ताडितोयम् भेरीशतसहस्राणि ढक्काशतशतानि च एकदा यत्र हन्यन्ते कोणाघातः स उ

न्मते अत्र हि वाच्यमुद्दाम प्रबंधत्वात् प्रबंधस्याभिनेयत्वान्न तथा किन्तु वक्ता भीमसेन इति तदौचित्यादुद्दामा वर्णा द्यः क्वचिद्वाच्यौचित्यात्
यथा शंकुव्याकीर्णरङ्कुद्रुतनिशितशरस्तुण्दीव्यत्तरस्तु ज्याघोषस्तुब्धकण्ठीरवरवचकितव्यस्तमातंगयूथम् खड्गव्यालूनखड्गं तुमुलकल
कल प्रान्तकूजच्छकुन्ते भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने अत्र हि वाच्यस्य सर्वप्राणिविप्लवात्मकमृगयायाएव तथात्वात्
त्वम् क्वचित्प्रबंधौचित्यात् ॥ यथा ॥ कादम्बर्यादौ शृङ्गारेपि नमसृणा वर्णा इति दिक् ॥ सर्वसाधारणं दोषमाह ॥ गृहीतमुक्तकोनेष्टो हरवाणा
मरीषिता मात्राभेदोप्यतः व्याप्यः पदेष्वेषशुभावहः एकस्य पदस्य शेषे यो वर्णः सो परस्याद्येन दीयते यथा ॥ नाककलाहकारे फवकारा
णां सुतराम् ॥ यथा ॥ प्रवाहहरितादूर्वाविग्राहरसितं तथा स्फूर्जत्का घचपाभूमिर्भूयः पुण्यैरवाप्यते मात्राभेदेपि स्वल्पो दोष नाककादम्बि
नी पदैत्वेण न दोषः किन्तु गुणः ॥ यथा ॥ वन्दामहे महेशान इत्यादौ अन्यदप्याह रलयोश्च चवर्णस्पर्शे यित्यायैव भूरितारे फलकारवर्ग
णां भूयस्त्वे शेषे यित्यहे तु तथा रसहानिकरमित्यर्थः ॥ संधौ वर्णदोषमाह ॥ रसहास्त्वादतिह्रद्येन म शरहा हाहकारश्च कचतपशराशकका
राद्धरादेस्मायभूयसंयोगः तात्सकारात् कात्ककारात् अधराअधोवर्त्तिनः अतिहृद्ययोः शृंगारहास्ययोः रसयोर्दोषायभवन्ति शब्द

अ॰ शे॰ सू॰

३९

